*प्रथम संस्कृत संस्करण :* अगस्त 2015 श्रावण 1937
*पुनर्मुद्रण :* जुलाई 2020 श्रावण 1942


**PD 153T RPS**

**पुस्तकमाला निर्माण समिति**

कंचन सेठी, कृष्ण कुमार, ज्योति सेठी, टुलटुल विश्वास, मुकेश मालवीय, राधिका मेनन, शालिनी शर्मा, लता पाण्डे (स्वर्गीय), स्वाति वर्मा, सारिका वशिष्ठ, सीमा कुमारी, सोनिका कौशिक, सुशील शुक्ल

**सदस्य-समन्वयक** – लतिका गुप्ता

**संपादक (संस्कृत)** – कृष्णचन्द्र त्रिपाठी

**संस्कृत अनुवाद** – रणजित बेहेरा, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**चित्रांकन, सज्जा तथा आवरण**– निधि वाधवा

**संस्कृत समीक्षा समिति**

यज्ञ दत्त शर्मा, सेवानिवृत *प्रोफ़ेसर संस्कृत*, दिल्ली विश्वविद्यालय, दिल्ली; कृष्ण चन्द्र त्रिपाठी, *प्रोफ़ेसर संस्कृत*, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी. नई दिल्ली; राजेश्वर प्रसाद मिश्र, *प्रोफ़ेसर संस्कृत*, संस्कृत पालि एवं प्राकृत विभाग, कुरुक्षेत्र विश्वविद्यालय, हरियाणा; भागीरथी नन्द, *एसोसिएट प्रोफ़ेसर*, साहित्य विभाग, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली; पतञ्जलि कुमार भाटिया, *अध्यक्ष*, संस्कृत विभाग, पी.जी.डी.ए.वी. कॉलेज, दिल्ली विश्वविद्यालय, नई दिल्ली; सूर्य नारायण नन्द, *अतिथि अध्यापक*, सेंट स्टीफेन्स कॉलेज, दिल्ली विश्वविद्यालय, दिल्ली; हरेकृष्ण अगस्ति, *असिस्टैंट प्रोफ़ेसर*, व्याकरण विभाग, कवि कुलगुरु कालिदास संस्कृत विश्वविद्यालय, नागपुर, महाराष्ट्र; सुगन्ध पाण्डेय, *टी.जी.टी. संस्कृत*, केन्द्रीय विद्यालय, काशीपुर, ऊधम सिंह नगर, उत्तराखण्ड; निर्मल मिश्र, *टी.जी.टी. संस्कृत*, केन्द्रीय विद्यालय, नरेला, दिल्ली; डॉ. जतीन्द्र मोहन मिश्र, *सह आचार्य*, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**आभार ज्ञापन**

प्रो. बी.के.त्रिपाठी, *निदेशक*, एन.सी.ई.आर.टी., नई दिल्ली; कृष्ण कुमार, *पूर्व-निदेशक*, एन.सी.ई.आर.टी., नई दिल्ली; वसुधा कामथ, *पूर्व-संयुक्त-निदेशक*, केन्द्रीय शैक्षिक प्रोद्योगिकी संस्थान, एन.सी.ई.आर.टी., नई दिल्ली; उमा शंकर शर्मा ऋषि, *पूर्व विभागाध्यक्ष*, संस्कृत विभाग, पटना विश्वविद्यालय, पटना, बिहार; के. के. वशिष्ठ, *पूर्व-विभागाध्यक्ष*, प्रारंभिक शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

80 जी.एस.एम. पेपर पर मुद्रित

सचिव, राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद्, श्री अरविन्द मार्ग, नयी दिल्ली 110016 द्वारा प्रकाशन प्रभाग में प्रकाशित तथा रोहन प्रज्ञा प्रिंटिग एवं पैकिंग प्रा.लि., एच-76, साइट-V, यू.पी.एस. आई.डी.सी., कासना, ग्रेटर नोएडा, जी.बी. नगर (उ.प्र.) द्वारा मुद्रित।

**ISBN** 978-93-5007-353-7 (वर्षा-सैट)
978-93-5007-384-1

वर्षा-क्रमिक-पुस्तकमाला प्राथमिककक्षायाः बालानां कृते वर्तते। अस्याः अभिप्रायः – 'बोधनेन सह' स्वयंपठनस्य अवसरपरिकल्पनं वर्तते। अस्याः पुस्तकमालायाः कथाः चतुर्षु स्तरेषु पञ्चसु कथावस्तुषु च विभक्ताः सन्ति। 'वर्षा' बालानाम् सानन्दं पठने स्थायिपाठकत्वेन निर्माणे च सहायिका भविष्यति। बालेभ्यः दैनन्दिन्यः लघुलघुघटनाः कथा इव रुचिकराः प्रतीयन्ते। अतः वर्षा-मालिकायाः सर्वाः कथाः दैनिकजीवनस्य अनुभवान् आधृत्य वर्तन्ते। लघुबालानां पठनाय प्रचुरमात्रायां पुस्तकानि उपलब्धानि स्युरिति अस्याः पुस्तकमालायाः अपरमुद्देश्यं वर्तते।

वर्षा-पुस्तकमाला बालानां पठन-शिक्षणे, स्थायिपाठकनिर्माणे, सूचनासंग्रहणे पाठ्यचर्यायाः प्रत्येकं क्षेत्रे च सहायिका भविष्यति। शिक्षकाः वर्षा-मालिकां कक्षायाम् तथा स्थापयेयुः येन बालाः सुखेन पुस्तकानि ग्रहीतुं शक्नुयुः।



**एन.सी.ई.आर.टी. के प्रकाशन प्रभाग के कार्यालय**

- एन.सी.ई.आर.टी. कैंपस, श्री अरविंद मार्ग, नयी दिल्ली 110 016 **फोन** : 011-26562708
- 108, 100 फीट रोड, हेली एक्सटेंशन, होस्डेकेरे, बनाशंकरी III स्टेज, बंगलूरु 560 085 **फोन** : 080-26725740
- नवजीवन ट्रस्ट भवन, डाकघर नवजीवन, अहमदाबाद 380 014 **फोन** : 079-27541446
- सी.डब्ल्यू.सी. कैंपस, निकट: धनकल बस स्टॉप पनिहटी, कोलकाता 700 114 **फोन** : 033-25530454
- सी.डब्ल्यू.सी. कॉम्प्लैक्स, मालीगाँव, गुवाहाटी 781 021 **फोन** : 0361-2674869

***प्रकाशन सहयोग***

अध्यक्ष, प्रकाशन प्रभाग : *अनूप कुमार राजपूत*
मुख्य संपादक : *श्वेता उप्पल*
मुख्य उत्पादन अधिकारी : *अरुण चितकारा*
मुख्य व्यापार प्रबंधक : *विपिन दिवान*

# पीत्वा: गुल्ली


गुल्ली


पीलूः


माता





एकदा रान्याः गृहे प्रातःकालात् एव संरम्भः आसीत्।
प्रातःकालात् एव ध्वनयः श्रूयन्ते स्म।
ध्वनिभिः रान्याः निद्रा भग्ना जाता।
सा रमाम् अपि प्रबोधितवती।



रानी उत्थाय अङ्गनम् आगता।
अङ्गने अति संरम्भः आसीत्।
सर्वे स्वा स्वा कर्मणि रताः आसन्।
सा सर्वान् अपश्यत्।



पिता चुल्ल्यां स्थालीं स्थापयति स्म।
स्थाल्यां जलं द्विदलानि तण्डुलानि च आसन्।
माता स्यूतक-द्वयं धृत्वा उपविष्टा आसीत्।
सा स्यूतकाभ्यां गुडं निस्सारयति स्म।





रानी अपश्यत् यत् पीलू–धेनुः वत्सां प्रसूतवती।
सा पीलवाः पार्श्वे उपविष्टा आसीत्।।
पीलूः वत्सां लेढि स्म।
वत्सा अपि स्नेहेन स्व–मुखं लेहयति स्म।




रानी धावित्वा वत्सायाः समीपे अगच्छत्।
वत्सा कृष्णवर्णा आसीत्।
माता अपि रान्याः समीपे आगता।
सा पीलूं गुडं भोजयितुम् आरब्धा।




रानी वत्सां शनैः अस्पृशत्।
सा अतीव स्निग्धा आसीत्।
वत्सायाः केशाः भ्राजन्ते स्म।
तस्याः पुच्छं लघु आसीत्।





वत्सा पुनः पुनः उत्थातुं चेष्टां करोति स्म।
स्खलित्वा स्खलित्वा सा उपविशति स्म।
रानी तस्याः कटिं स्नेहेन अस्पृशत्।
रमा अपि तत्र आगता।



रमा पीत्वै गुडम् अभोजयत्।
रमा अपि वत्सां पुनः पुनः अस्पृशत्।
रमा रानी च अति प्रसन्ने आस्ताम्।
ते वत्सां दृष्ट्वा अतीव आनन्दिते अभवताम्।






रमा रानी च वत्सायाः नाम 'गुल्ली' इति अकुरुताम्।
ते मातरं तस्याः नाम सूचितवत्यौ।
ते प्रत्यागत्य गुल्ल्याः समीपे उपविष्टवत्यौ।
ते गुल्लीतः दूरं गन्तुं न इच्छतः स्म।





माता रमायै रान्यै च कतिचित् वस्त्र–खण्डानि अयच्छत्।
सा गुल्ल्याः कृते रज्जुं निर्मातुम् अवदत्।
गुल्ल्याः बन्धनाय रज्जुः मृदुः भवेत्।
उभे उपविश्य रज्जु–वयनम् अकुरुताम्।





रमा अपश्यत् यत् पिता गुल्लीं शनैः शनैः कर्षति स्म।
सः गुल्ल्याः मुखं पील्वाः स्तनेन योजितवान्।
गुल्ली दुग्धं पातुं प्रारभत।
पीलूः तूष्णीं स्थिता आसीत्।





गुल्ली दुग्धपाने रता आसीत्।
तस्याः पुच्छं इतस्ततः विलसति स्म।
अत्रान्तरे माता पीलवाः कृते क्वाथम् आनीतवती।
पीलूः क्वाथं पातुम् आरब्धा।





अल्प–कालानन्तरं पिता गुल्लीं ततः पृथक् अकरोत्।
तदनन्तरं माता पील्वाः दुग्ध–दोहनम् अकरोत्।
तस्मिन् दिवसे पील्वाः दुग्धं किञ्चित् भिन्नम् इव आसीत्।
दुग्धं पीतं विदलितं च आसीत्।





रमा रानी च मातुः समीपं गतवत्यौ।
विद्यालयं गन्तुं तयोः इच्छा न आसीत्।
माता तयोः इच्छां स्वीकृतवती।
किन्तु माता एकं पणम् अकरोत्।






माता अवदत् यत् ते गुल्लीं स्नापयेताम्।
एतत् श्रुत्वा ते प्रसन्ने अभवताम्।
रमा रानी च शनैः शनैः गुल्लीं स्नापितवत्यौ।
ते गुल्लीं स्नापयित्वा मृदु-रज्ज्वा बद्धवत्यौ।

# रमा-रान्योः अपराः कथाः


रानी अपि


मुनमुनः
मुन्नूः च


ऊर्णस्य
गोलकम्


हिक्-हिक् हिक्का


कूर्दमाने पदावरके


मादृशी


मातामह्याः उपनेत्रम्